शीर्ष चिरन्त (विरत) समल सीर पञ्जर पन्थ नल रोमन् लोमन् पुलिन सुपरि कटिप सकर्णक वृष्टि तीर्थ अगस्ति विकर नासिका—**इति संकाशादिः** ॥ ९४. बल चुल नल दल वट लकुल उरल पुल (पुल) मूल उलडुल (उल डुल) वन कुल—**इति बलादिः** ॥ ९५. पक्ष तुक्ष तुष कुण्ड अण्ड कम्बलिका वलिक चित्र अस्ति । 'पथिन्पन्थ च' ७९ । कुम्भ सीरक सरक सकल सरस समल अतिश्वन् रोमन् लोमन् हस्तिन् मकर लोमक शीर्ष निवात पाक सहक (सिंहक) अङ्कुश सुवर्णक हंसक हिंसक कुत्स बिल खिल यमल हस्त कला सकर्णक—**इति पक्षादिः** ॥ ९६. कर्ण वसिष्ठ अर्क अर्कलूष द्रुपद आनडुह्य पाञ्चजन्य स्फिग (स्फिज्) कुम्भी कुन्ती जित्वन् जीवन्त कुलिश आण्डीवत् (आण्डीवत) जव जैत्र आकन (आनक)—**इति कर्णादिः** ॥ ९७. सुतङ्गम मुनिचित विप्रचित्त महाचित्त महापुत्र स्वन श्वेत गडिक (खडिक) शुक्र विप्र बीजावापिन् (बीज वापिन्) अर्जुन श्वन् अजिर जीव खण्डित कर्ण विग्रह ॥ **इति सुतङ्गमादिः** ॥ ९८. प्रगदिन् मगदिन् मदन्दिन् कविल खण्डित गदित चूडार मडार मन्दार कोविदार—**इति प्रगद्यादिः** ॥ ९९. वराह पलाश (पलाश) शेरीष (शिरीष) पिनद्ध निबद्ध बलाह स्थूल विदग्ध (विजग्ध) विभग्न (निमग्न) बाहु खदिर शर्करा ॥ **इति वराहादिः** ॥ १००. कुमुद गोमथ रथकार दशग्राम अश्वत्थ शाल्मलि (शिरीष) मुनिस्थल कुण्डल कूट मधुकर्ण घासकुन्द शुचिकर्ण—**इति कुमुदादिः**॥

**८१. जनपदे लुप् १२९३ ।**

**८२. वरणादिभ्यश्च १३०१ ।**

१०१. वरणा शृङ्गी शाल्मलि शुण्डी शयाण्डी पर्णी ताम्रपर्णी गोद आलिङ्ग्यायन जालपदी (जानपदी) जम्बू पुष्कर चम्पा पम्पा वल्गु उज्जयनी गया मथुरा तक्षशिला उरसा गोमती वलभी—**इति वरणादिः** ॥

**८३. शर्कराया वा १३०२ ।**

**८४. ठक्छौ च १३०३ ।**

८५. नद्यां मतुप् १३०४ ।

८६. मध्वादिभ्यश्च १३०५ ।

१०२. मधु बिस स्थाणु वेणु कर्कन्धु शमी करीर हिम किशरा शर्याण मरुत् वार्दाली शर इष्टका आसुति शक्ति आसन्दी शकल शलाका आमिषी इक्षु रोमन् रुष्टि रुष्य तक्षशिला खड वट वेट—इति मध्वादिः ॥

८७. कुमुदनडवेतसेभ्यो ड्मतुप् १३०६ ।

* महिषाच्चेति वक्तव्यम् ।

८८. नडशादाड्ड्वलच् १३०७ ।

८९. शिखाया वलच् १३०८ ।

९०. उत्करादिभ्यश्छः १३०९ ।

१०३. उत्कर संफल शफर पिप्पल पिप्पलीमूल अश्मन् सुवर्ण खलाजिन तिक कितव अणक त्रैवण पिचुक अश्वत्थ काश क्षुद्र भस्त्रा शाल जन्या अजिर चर्मन् उत्क्रोश क्षान्त खदिर शूर्पणाय श्यावनाय नैवाकव तृण वृक्ष शाक पलाश विजिगीषा अनेक आतप फल संपर अर्क गर्त अग्नि वैराणक इडा अरण्य निशान्त पर्ण नीचायक शङ्कर अवरोहित क्षार विशाल वेत्र अरीहण खण्ड वातागर मन्त्रणार्ह इन्द्रवृक्ष नितान्तवृक्ष (नितान्तावृक्ष) आर्द्रवृक्ष—इत्युत्करादिः ॥

९१. नडादीनां कुक्च १३१० ।

१०४. नड प्लक्ष बिल्व वेणु वेत्र वेतस इक्षु काष्ठ कपोत तृण । 'क्रुञ्चा ह्रस्वत्वं च' ८० । 'तक्षन्नलोपश्च' ८१ । इति नडादिः ॥

९२. शेषे १३१२ ।

९३. राष्ट्रावारपाराद्घखौ १३१३ ।

* अवारपाराद्विगृहीतादपि विपरीताच्चेति वक्तव्यम् ।

९४. ग्रामाद्यखञौ १३१४ ।

९५. कत्र्यादिभ्यो ढकञ् १३१५ ।

१०५. कत्रि उम्भि पुष्कर पुष्कल मोदन कुम्भी

कुण्डिम नगरी माहिष्मती वर्मती उख्या ग्राम । 'कुढ्याया यलोपश्च' ८२ । इति कत्त्र्यादिः ॥

९६. कुलकुक्षिग्रीवाभ्यः श्वास्यलंकारेषु [१३१६

९७. नद्यादिभ्यो ढक् १३१७ ।

१०६. नदी मही वाराणसी श्रावस्ती कौशाम्बी वनकौशाम्बी (वनकोशाम्बी) काशपरी काशफारी (काशफरी) खादिरी पूर्वनगरी पाठा माया शाल्वा दार्वा सेतकी 'बडबाया वृषे' ८३ । इति नद्यादिः ॥

९८. दक्षिणापश्चात्पुरसस्त्यक् १३१८ ।

९९. कापिश्याः ष्फक् १३१९ ।

* बाह्लयुर्दिपर्दिभ्यश्चेति वक्तव्यम् ।

१००. रङ्कोरमनुष्येऽण्च १३२० ॥ ५ ॥

१०१. द्युप्रागपागुदक्प्रतीचो यत् १३२१ ।

१०२. कन्थायाष्ठक् १३२२ ।

१०३. वर्णौ वुक् १३२३ ।

१०४. अव्ययात्त्यप् १३२४ ।

* अमेहक्वतसित्रेभ्य एव ।

* त्यब्नेर्ध्रुवे ।

* निसो गते ।

* अरण्याण्णः ।

* दूरादेत्यः ।

* उत्तरादाहञ् ।

* आविष्टयस्योपसंख्यानं छन्दसि ।

१०५. ऐषमोह्यःश्वसोऽन्यतरस्याम् १३२६ ।

१०६. तीररू[१]पोत्तरपदादञ्ञौ[२] १३२७ ।

१०७. दिक्पूर्वपदादसंज्ञायां ञः १३२८ ।

१०८. मद्रेभ्योऽञ् १३२९ । [१३३०

१०९. उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तात्

१. 'रूप्य' २. 'अञ्ञौ' इति च क्वचित्पाठः ।

११०. प्रस्थोत्तरपदपलद्यादिकोपधादण् १३३१ ।

१०७. पलदी परिषद् रोमक वाहीक कलकीट बहुकीट जालकीट कमलकीट कमलकीकर कमलभिदा गौष्ठी नैकती परिखा शूरसेन गोमती पटच्चर उदपान यकृल्लोम—इति पलद्यादिः ॥

१११. कण्वादिभ्यो गोत्रे १३३२ ।

११२. इञश्च १३३३ ।

११३. न द्व्यचः प्राच्यभरतेषु १३३४ ।

११४. वृद्धाच्छः १३३७ ।

११५. भवतष्ठक्छसौ १३३९ ।

११६. काश्यादिभ्यष्ठञ्ञिठौ १३४० ।

१०८. काशि चेदि ( वेदि ) सांयाति संवाह अच्युत मोदमान शकुलाद हस्तिकर्षू कुनामन् हिरण्य करण गोवासन भारङ्गी अरिन्दम अरित्र देवदत्त दशग्राम शौवावतान युवराज उपराज देवराज मोदन सिन्धुमित्र दासमित्र सुधामित्र सोममित्र छागमित्र साधमित्र (सधमित्र)। 'आपदादिपूर्वपदात्कालान्तात्' ८४ । आपद् ऊर्ध्व तत्—इति काश्यादिः ॥

११७. बाहीकग्रामेभ्यश्च १३४१ ।

११८. विभाषोशीनरेषु १३४२ ।

११९. ओर्देशे ठञ् १३४३ ।

१२०. वृद्धात्प्राचाम् १३४४ ॥ ६ ॥

१२१. धन्वयोपधाद्वुञ् १३४५ ।

१२२. प्रस्थपुरवहान्ताच्च १३४६ ।

१२३. रोपधेतोः प्राचाम् १३४७ ।

१२४. जनपदतदवध्योश्च १३४८ ।

१२५. अवृद्धादपि बहुवचनविषयात् १३४९

१२६. कच्छाग्निवक्त्रवर्तोत्तरपदात् १३५० ।

१२७. धूमादिभ्यश्च १३५१ ।

१०९. धूम षडण्ड शशादन अर्जुनाव माहकस्थली आनकस्थली माहिषस्थली मानस्थली अट्टस्थली मद्रुकस्थली समुद्रस्थली दाण्डायनस्थली राजस्थली विदेह राजगृह सात्रासाह शष्प मित्रवर्ध्र (मित्रवर्ध) भक्षाली मद्रकूल आजीकूल द्व्यहव (द्व्याहाव) त्र्यहव (त्र्याहाव) संस्फीय बर्बर वर्ज्य गर्त आनत माठर पाथेय घोष पल्ली आराज्ञी धार्तराज्ञी आवय तीर्थ । 'कूलात्सौवीरेषु' ८५ । 'समुद्रान्नावि मनुष्ये च' ८६ । कुक्षि अन्तरीप द्वीप अरुण उज्जयनी पट्टार दक्षिणापथ साकेत—इति धूमादिः ॥

१२८. नगरात्कुत्सनप्रावीण्ययोः १३५२ ।

१२९. अरण्यान्मनुष्ये १३५३ ।

* पथ्यध्यायन्यायविहारमनुष्यहस्तिष्विति वक्तव्यम् ।
* वा गोमयेषु ।

१३०. विभाषा कुरुयुगंधराभ्याम् १३५४ ।

१३१. मद्रवृज्योः कन् १३५५ ।

१३२. कोपधादण् १३५६ ।

१३३. कच्छादिभ्यश्च १३५७ ।

११०. कच्छ सिन्धु वर्णु गन्धार मधुमत् कम्बोज कश्मीर साल्व कुरु अनुषण्ड द्वीप अनूप अजवाह विजापक कलूतर रङ्कु—इति कच्छादिः ॥

१३४. मनुष्यतत्स्थयोर्वुञ् १३५८ ।

१३५. अपदातौ साल्वात् १३५९ ।

१३६. गोयवाग्वोश्च १३६० ।

१३७. गर्तोत्तरपदाच्छः १३६१ ।

१३८. गहादिभ्यश्च १३६२ ।

१११. गह अन्तस्थ सम विषम । 'मध्य मध्यमं चाण्चरणे' ८७ । उत्तम अङ्ग वङ्ग मगध पूर्वपक्ष अपरपक्ष अधमशाख उत्तमशाख एकशाख समानशाख

समानग्राम एकग्राम एकवृक्ष एकपलाश इष्वग्र इष्वनीक अवस्यन्दन कामप्रस्थ शाडिकाडायनि (खाडायन) काठेरणि लावेरणि सौमित्रि शैशिरि आसुत् दैवशर्मि श्रौति आर्हिंसि आमित्रि व्याडि वैजि आध्यश्वि आनृशासि (आनृशंसि) शौङ्गि आग्निशर्मि भौजि वाराटकि वाल्मिकि (वाल्मीकिं) क्षेमवृद्धि आश्वत्थि औद्गाहमानि ऐक बिन्दवि दन्ताग्र हंस तत्वग्र (तन्त्वग्र) उत्तर अन्तर (अनन्तर) 'मुखपार्श्वतसोर्लोपः' ८८। 'जनपरयोः कुक्च' ८०। 'देवस्य च' ९०। 'वेणुकादिभ्यश्छण्' ९१। इति गहादिः॥ आकृतिगणः॥

१३९. प्राचां कटादेः १३६३।

१४०. राज्ञः क च १३६४। ॥ ७॥

१४१. वृद्धादकेकान्तखोपधात् १३६५।

* अकेकान्तग्रहणे कोपधग्रहणं सौसुकाद्यर्थम्।

१४२. कन्थापलदनगरग्रामह्रदोत्तरपदात् १३६६।

१४३. पर्वताच्च १३६७।

१४४. विभाषाऽमनुष्ये १३६८।

१४५. कृकणपर्णाद्भारद्वाजे १३६९।

तेन सास्मिन्ठञ्क्रमादिभ्यो जनपदे द्युप्रागपाग्धन्ववृद्धात्पञ्च॥

इति पाणिनीयसूत्रपाठे चतुर्थस्याध्यायस्य द्वितीयः पादः।

## तृतीयः पादः।

१. युष्मदस्मदोरन्यतरस्यां खञ्च १३७०।

२. तस्मिन्नणि च युष्माकास्माकौ १३७१।

३. तवकममकावेकवचने १३७२।

४. अर्धाद्यत् १३७४।

५. परावराधमोत्तमपूर्वाच्च १३७५।

६. दिक्पूर्वपदाट्ठञ्च १३७६।

७. ग्रामजनपदैकदेशादञ्ठञौ १३७७।

८. मध्यान्मः १३७८।

* (आदेश्चेति वक्तव्यम्)

* (अवोधसोर्लोपश्च।)

९. अ सांप्रतिके १३७९।

१०. द्वीपादनुसमुद्रं यञ् १३८०।

११. कालाट्ठञ् १३८१।

१२. श्राद्धे शरदः १३८२।

१३. विभाषा रोगातपयोः १३८३।

१४. निशाप्रदोषाभ्यां च १३८४।

१५. श्वसस्तुट् च १३८५।

१६. संधिवेलाद्यृतुनक्षत्रेभ्योऽण् १३८७।

११२. सन्धिवेला सन्ध्या अमावास्या त्रयोदशी चतुर्दशी पञ्चदशी पौर्णमासी प्रतिपत्। 'संवत्सरात्फलपर्वणोः' ९२। इति सन्धिवेलादिः॥

१७. प्रावृष एण्यः १३८८।

१८. वर्षाभ्यष्ठक् १३८९।

१९. छन्दसि ठञ् ३४५०।

२०. वसन्ताच्च ३४५१। ॥१॥

२१. हेमन्ताच्च ३४५२।

२२. सर्वत्राण्च तलोपश्च १३९०।

२३. सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युटयुलौ तुट् च १३९१।

* चिरपरुत्परारिभ्यस्त्नो वक्तव्यः।

* अग्रादिपश्चाड्डिमच्।

* अन्ताच्च।

२४. विभाषा पूर्वाह्णापराह्णाभ्याम् १३९२।

२५. तत्र जातः १३९३ ।
२६. प्रावृषष्ठप् १३९४ ।
२७. संज्ञायां शरदो वुञ् १३९५ ।
२८. पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्कराद्वुन्
२९. पथः पन्थ च १४०२ । [१४०१
३०. अमावास्याया वा १४०३ ।
३१. अ च १४०४ ।
३२. सिन्ध्वपकराभ्यां कन् १४०५ ।
३३. अणञौ च १४०६ ।
३४. श्रविष्ठाफल्गुन्यनूराधास्वातितिष्यपुनर्वसुहस्तविशाखाऽषाढाबहुलाल्लुक् १४०७

* चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसंख्यानम् ।
* फल्गुन्यषाढाभ्यां टानौ वक्तव्यौ ।
* श्रविष्ठाऽषाढाभ्यां छण्वक्तव्यः ।

३५. स्थानान्तगोशालखरशालाच्च १४१० ।
३६. वत्सशालाभिजिदश्वयुक्छतभिषजो वा
३७. नक्षत्रेभ्यो बहुलम् १४१२ । [१४११
३८. कृतलब्धक्रीतकुशलाः १४१३ ।
३९. प्रायभवः १४१४ ।
४०. उपजानूपकर्णोपनीवेष्ठक् १४१५ ॥२॥
४१. संभूते १४१६ ।
४२. कोशाड्ढञ् १४१७ ।
४३. कालात्साधुपुष्प्यत्पच्यमानेषु १४१८ ।
४४. उप्ते च १४१९ ।
४५. आश्वयुज्या वुञ् १४२० ।
४६. ग्रीष्मवसन्तादन्यतरस्याम् १४२१ ।
४७. देयमृणे १४२२ ।
४८. कलाप्यश्वत्थयवबुसाद्वुन् १४२३ ।

४९. ग्रीष्मावरसमाद्वुञ् १४२४ ।

५०. संवत्सराग्रहायणीभ्यां ठञ्च १४२५ ।

५१. व्याहरति मृगः १४२६ ।

५२. तदस्य सोढम् १४२७ ।

५३. तत्र भवः १४२८ ।

५४. दिगादिभ्यो यत् १४२९ ।

११३. दिश् वर्ग पूग गण पक्ष धाय्य मित्र मेधा अन्तर पथिन् रहस् अलीक उखा साक्षिन् देश आदि अन्त मुख जघन मेघ यूथ । 'उदकात्संज्ञायाम्' ९३ । न्याय (न्माय) वंश केश काल आकाश—**इति दिगादिः**॥

५५. शरीरावयवाच्च १४३० ।

५६. दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ् १४३३ ।

५७. ग्रीवाभ्योऽण्च १४३४ ।

५८. गम्भीराञ्ञ्यः १४३५ ।

* बहिर्देवपञ्चजनेभ्यश्च ।

५९. अव्ययीभावाच्च १४३६ ।

* परिमुखादिभ्य एवेष्यते ।

११४. (वा २८६९) । परिमुख परिहनु पर्योष्ठ पर्युलूखल परिसीर उपसीर उपस्थूण उपकलाप अनुपथ अनुपद अनुगङ्ग अनुतिल अनुसीत अनुसाय अनुसीर अनुमाष अनुयव अनुयूप अनुवंश प्रतिशाख—**इति परिमुखादिः** ॥

६०. अन्तःपूर्वपदाट्ठञ् १४३७ ॥ ३ ॥

* अध्यात्मादेष्ठञिष्यते ।

११५. (वा २८७२) । अध्यात्म अधिदेव अधिभूत—**इत्यध्यात्मादिः** ॥

* मुखपार्श्वतसोरीयः ।

* कुग्जनस्य परस्य च ।

* भवार्थे तु लुग्वक्तव्यः ।

६१. ग्रामात्पर्यनुपूर्वात् १४४० ।

६२. जिह्वामूलाङ्गुलेश्छः १४४१।

६३. वर्गान्ताच्च १४४२।

६४. अशब्दे यत्खावन्यतरस्याम् १४४३।

६५. कर्णललाटात्कनलंकारे १४४४।

६६. तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः १४४५।

६७. बह्वचोऽन्तोदात्ताट्ठञ् १४४६।

६८. क्रतुयज्ञेभ्यश्च १४४७।

६९. अध्यायेष्वेवर्षेः १४४८।

७०. पौरोडाशपुरोडाशात्ष्ठन् १४४९।

७१. छन्दसो यदणौ १४५०।

७२. द्व्यजृद्ब्राह्मणर्क्प्रथमाध्वरपुरश्चरणनामाख्याताट्ठक् १४५१।

* नामाख्यातग्रहणं संघातविगृहीतार्थम्।

७३. अणृगयनादिभ्यः १४५२।

११६. ऋगयन पदव्याख्यान छन्दोमान छन्दोभाषा छन्दोविचिति न्याय पुनरुक्त निरुक्त व्याकरण निगम वास्तुविद्या क्षत्रविद्या अङ्गविद्या विद्या उत्पात उत्पाद उद्याव संवत्सर मुहूर्त उपनिषद् निमित्त शिक्षा भिक्षा—इत्यृगयनादिः॥

७४. तत आगतः १४५३।

७५. ठगायस्थानेभ्यः १४५४।

७६. शुण्डिकादिभ्योऽण् १४५५।

११७. शुण्डिक कृकण स्थण्डिल उदपान उपल तीर्थ भूमि तृण पर्ण—इति शुण्डिकादिः॥

७७. विद्यायोनिसंबन्धेभ्यो वुञ् १४५६।

७८. ऋतष्ठञ् १४५७।

७९. पितुर्यच्च १४५८।

८०. गोत्रादङ्कवत् १४५९ ॥ ४ ॥

८१. हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः १४६१

८२. मयट् च १४६२ ।

८३. प्रभवति १४६३ ।

८४. विदूराञ्ञ्यः १४६४ ।

८५. तद्गच्छति पथिदूतयोः १४६५ ।

८६. अभिनिष्क्रामति द्वारम् १४६६ ।

८७. अधिकृत्य कृते ग्रन्थे १४६७ ।

* लुबाख्यायिकाभ्यो बहुलम् ।

८८. शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः १४६८ ।

* द्वन्द्वे देवासुरादिभ्यः प्रतिषेधो वक्तव्यः ।

८९. सोऽस्य निवासः १४६९ ।

९०. अभिजनश्च १४७० ।

९१. आयुधजीविभ्यश्छः पर्वते १४७१ ।

९२. शण्डिकादिभ्यो ञ्यः १४७२ ।

११८. शण्डिक सर्वसेन सर्वकेश शक शट रक शङ्ख बोध । इति शण्डिकादिः ॥

९३. सिन्धुतक्षशिलादिभ्योऽणञौ १४७३ ।

११९. सिन्धु वर्णु मधुमत् कम्बोज साल्व कश्मीर गन्धार किष्किन्धा उरसा दरद (दरद्) गन्दिका । इति सिन्ध्वादिः ॥ १२०. तक्षशिला वत्सोद्धरण कैर्मेदुर ग्रामणी छगल क्रोष्टुकर्ण सिंहकर्ण संकुचित किनर काण्डधार पर्वत अवसान बर्बर कंस ॥ इति तक्षशिलादिः ॥

९४. तुदीसलातुरवर्मतीकूचवाराड्ढक्छण्ढञ्यकः १४७४ ।

९५. भक्तिः १४७५ ।

९६. अचित्तादेशकालाट्ठक् १४७६ ।

९७. महाराजाट्ठञ् १४७७ ।

९८. वासुदेवार्जुनाभ्यां वुन् १४७८ ।

९९. गोत्रक्षत्रियाख्येभ्यो बहुलं वुञ् १४७९

१००. जनपदिनां जनपदवत्सर्वं जनपदेन समानशब्दानां बहुवचने १४८०

१०१. तेन प्रोक्तम् १४८१ । [॥ ५ ॥

१०२. तित्तिरिवरतन्तुखण्डिकोखाच्छण् १४८२ ।

१०३. काश्यपकौशिकाभ्यामृषिभ्यां णिनिः १४८३ ।

१०४. कलापिवैशम्पायनान्तेवासिभ्यश्च १४८४ ।

१०५. पुराणप्रोक्तेषु ब्राह्मणकल्पेषु १४८५।

१०६. शौनकादिभ्यश्छन्दसि १४८६ ।

१२१. शौनक वाजसनेय शार्ङ्गरव शापेय शाष्पेय खाडायन स्तम्भ स्कन्ध देवदर्शन रज्जुभार रज्जुकण्ठ कठशाठ कषाय तल दण्ड पुरुषांसक (अश्वपेज) । **इति शौनकादिः ॥**

१०७. कठचरकाल्लुक् १४८७ ।

१०८. कलापिनोऽण् १४८८ ।

१०९. छगलिनो ढिनुक् १४८९ ।[१४९०

११०. पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः

१११. कर्मन्दकृशाश्वादिनिः १४९१ ।

११२. तेनैकदिक् १४९२ ।

११३. तसिश्च १४९३ ।

११४. उरसो यच्च १४९४ ।

११५. उपज्ञाते १४९५ ।

११६. कृते ग्रन्थे १४९६ ।

११७. संज्ञायाम् १४९७ ।

११८. कुलालादिभ्यो वुञ् १४९८ ।

१२२. कुलाल वरुड चण्डाल निषाद कर्मार सेना सिरिन्ध्र (सिरिध्र) सैरिन्ध्र देवराज पर्षत् (परिषत्) वधू मधु रुरु रुद्र अनडुह (अनडुह्) ब्रह्मन् कुम्भकार श्वपाक । इति कुलालादिः ॥

११९. क्षुद्राभ्रमरवटरपादपादञ् १४९९ ।

१२०. तस्येदम् १५०० ॥ ६ ॥

* पत्राद्वाह्ये ।

* वहेस्तुरणिट् च ।

* अग्नीधः शरणे रण् भत्वं च ।

* समिधामाधाने षेण्यण् ।

* चरणाद्धर्माम्नाययोः ।

१२१. रथाद्यत् १५०१ ।

१२२. पत्रपूर्वादञ् १५०२ ।

१२३. पत्राध्वर्युपरिषदश्च १५०३ ।

१२४. हलसीराट्ठक् १५०४ ।

१२५. द्वन्द्वाद्वुन्वैरमैथुनिकयोः १५०५ ।

* वैरे देवासुरादिभ्यः प्रतिषेधः ।

१२६. गोत्रचरणाद्वुञ् १५०६ ।

१२७. सङ्घाङ्कलक्षणेष्वञ्यञिञामण् १५०७

* घोषग्रहणमपि कर्तव्यम् ।

१२८. शाकलाद्वा १५०८ । [१५०९

१२९. छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः

१३०. न दण्डमाणवान्तेवासिषु १५१० ।

१३१. रैवतिकादिभ्यश्छः १५११ ।

१२३. रैवतिक स्वापिशि क्षेमवृद्धि गौरग्रीव (गौरग्रीवि) औदमेघि औदवापि वैजवापि । इति रैवतिकादिः ॥

१३२. कौपिञ्जलहास्तिपदादण् १५१२ ।

१३३. आथर्वणिकस्येकलोपश्च १५१३ ।

१३४. तस्य विकारः १५१४ ।

१३५. अवयवे च प्राण्योषधिवृक्षेभ्यः १५१५

१३६. बिल्वादिभ्योऽण् १५१६ ।

१२४. बिल्व व्रीहि काण्ड मुद्ग मसूर गोधूम इक्षु वेणु गवेधुका कर्पासी पाटली कर्कन्धु कुटीर । **इति बिल्वादिः** ॥

१३७. कोपधाच्च १५१७ ।

१३८. त्रपुजतुनोः षुक् १५१८ ।

१३९. ओरञ् १५१९ ।

१४०. अनुदात्तादेश्च १५२० ॥ ७ ॥

१४१. पलाशादिभ्यो वा १५२१ ।

१२५. पलाश खदिर शिंशपा स्पन्दन पूलाक करीर शिरीष यवास विकङ्कत । **इति पलाशादिः** ॥

१४२. शम्याः ष्लञ् १५२२ । [१५२३

१४३. मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः

१४४. नित्यं वृद्धशरादिभ्यः १५२४ ।

१२६. शर दर्भ मृद् (मृत्) कुटी तृण सोम बल्वज । **इति शरादिः** ॥

१४५. गोश्च पुरीषे १५२५ ।

१४६. पिष्टाच्च १५२६ ।

१४७. संज्ञायां कन् १५२७ ।

१४८. व्रीहेः पुरोडाशे १५२८ ।

---

१-२. इदं द्वयं वार्तिकमिति प्रामाणिकाः । विशेषस्तु बालमनोरमायां द्रष्टव्यः ।

१. 'शम्याष्ट्लञ्' इति भाष्यविदः ।

१४९. असंज्ञायां तिलयवाभ्याम् १५२९।

१५०. व्यचश्छन्दसि ३४५३।

१५१. नोत्वद्वर्ध्रबिल्वात् ३४५४।

१५२. तालादिभ्योऽण् १५३०।

१२७. 'तालाद्धनुषि' ९४। बार्हिण इन्द्रालिश (इन्द्रासिष) इन्द्रादश इन्द्रायुध चय श्यामाक पीयूक्षा। इति तालादिः॥

१५३. जातरूपेभ्यः परिमाणे १५३१।

१५४. प्राणिरजतादिभ्योऽञ् १५३२।

१२८. रजत सीस लोह उदुम्बर नीप दारु रोहितक बिभीतक पीतदारु तीव्रदारु त्रिकण्टक कण्टकार। इति रजतादिः॥

१५५. ञितश्च तत्प्रत्ययात् १५३३।

१५६. क्रीतवत्परिमाणात् १५३४।

१५७. उष्ट्राद्वुञ् १५३५।

१५८. उमोर्णयोर्वा १५३६।

१५९. एण्या ढञ् १५३७।

१६०. गोपयसोर्यत् १५३८ ॥ ८ ॥

१६१. द्रोश्च १५३९।

१६२. माने वयः १५४०।

१६३. फले लुक् १५४१।

१६४. प्लक्षादिभ्योऽण् १५४२।

१२९. प्लक्ष न्यग्रोध अश्वत्थ इङ्गुदी शिग्रु (रुरु) कक्षतु बृहती। इति प्लक्षादिः॥

१६५. जम्ब्वा वा १५४४।

१६६. लुप् च १५४५।

* फलपाकशुषामुपसंख्यानम्।

१६७. हरीतक्यादिभ्यश्च १५४६।

१३०. हरीतकी कोशातकी नखरजनी शष्कण्डी दार्डी दोडी श्वेतपाकी अर्जुनपाकी द्राक्षा काला ध्वाक्षा गभीका कण्टकारिका पिप्पली चिम्पा (चिञ्चा) शेफालिका **इति हरीतक्यादिः ॥**

१६८. कंसीयपरशव्ययोर्यञ्ञौ लुक्च १५४७।

युष्मद्धेमन्तात्संभूते ग्रामाद्धेतुतेन रथा-
त्पलाशादिभ्यो द्रोश्चाष्टौ ॥

इति पाणिनीयसूत्रपाठे चतुर्थस्याध्यायस्य तृतीयः पादः।

## चतुर्थः पादः।

१. प्राग्वहतेष्ठक् १५४८।

* पुष्पमूलेषु बहुलम्।

* तदाहेति माशब्दादिभ्य उपसंख्यानम्।

१३१. (वा २९५१)। माशब्दः। नित्यशब्दः। कार्यशब्दः ॥ **इति माशब्दादिः ॥**

* आहौ प्रभूतादिभ्यः।

१३२. (वा २९५२)। प्रभूत पर्याप्त। **इति प्रभूतादिः।**

* पृच्छतौ सुस्नातादिभ्यः।

१३३. (वा २९५३)। सुस्नात सुखरात्रि सुखशयन। **इति सुस्नातादिः ॥**

* गच्छतौ परदारादिभ्यः।

१३४. (वा २९५४)। परदार गुरुतल्प। **इति परदारादिः ॥**

२. तेन दीव्यति खनति जयति जितम् [१५५०

३. संस्कृतम् १५५१।

४. कुलुत्थकोपधादण् १५५२।

५. तरति १५५३।

६. गोपुच्छाट्ठञ् १५५४ ।

७. नौद्व्यचष्ठन् १५५५ ।

८. चरति १५५६ ।

९. आकर्षात्ष्ठल् १५५७ ।

१०. पर्पादिभ्यः ष्ठन् १५५८ ।

१३५. पर्प अश्व अश्वत्थ रथ जाल न्यास व्याल। पाद । इति पर्पादिः ॥

११. श्वगणाट्ठञ्च १५५९ ।

१२. वेतनादिभ्यो जीवति १५६२ ।

१३६. वेतन वाहन अर्धवाहन धनुर्दण्ड जाल वेश उपवेश प्रेषण उपवस्ति सुख शय्या शक्ति उपनिषद् उपदेश स्फिज् (स्फिज) पाद (उपस्थ) उपस्थान उपहस्त । इति वेतनादिः ॥

१३. वस्नक्रयविक्रयाट्ठन् १५६३ ।

* क्रयविक्रयग्रहणं संघातविगृहीतार्थम् ।

१४. आयुधाच्छ च १५६४ ।

१५. हरत्युत्सङ्गादिभ्यः १५६५ ।

१३७. उत्सङ्ग (उडुप) उत्पुत (उत्पन्न) उत्पुट पिटक पिटाक । इत्युत्सङ्गादिः ॥

१६. भस्त्रादिभ्यः ष्ठन् १५६६ ।

१३८. भस्त्रा भरट भरण शीर्षभार शीर्षेभार अंसभार अंसेभार । इति भस्त्रादिः ॥

१७. विभाषा विवधात् १५६७ ।

* वीवधादपि ।

१८. अण्कुटिलिकायाः १५६८ ।

१९. निर्वृत्तेऽक्षद्यूतादिभ्यः १५६९ ।

१३९. अक्षद्यूत (जानुप्रहृत) जङ्घाप्रहृत जङ्घाप्रहत पादस्वेदन कण्टकमर्दन गतानुगत गतागत यातोपयात अनुगत । इत्यक्षद्यूतादिः ॥

२०. त्रेर्मम्नित्यम् १५७० । ॥ १ ॥

* भावप्रत्ययान्तादिमब्वक्तव्यः ।

२१. अपमित्ययाचिताभ्यां कक्कनौ १५७१ ॥

२२. संसृष्टे १५७२ ।

२३. चूर्णादिनिः १५७३ ।

२४. लवणाल्लुक् १५७४ ।

२५. मुद्गादण् १५७५ ।

२६. व्यञ्जनैरुपसिक्ते १५७६ ।

२७. ओजःसहोऽम्भसा वर्तते १५७७ ।

२८. तत्प्रत्यनुपूर्वमीपलोमकूलम् १५७८ ।

२९. परिमुखं च १५७९ ।

३०. प्रयच्छति गर्ह्यम् १५८० ।

* वृद्धेर्वृधुषिभावो वक्तव्यः ।

३१. कुसीददशैकादशात्ष्ठन्ष्ठचौ १५८१ ।

३२. उञ्छति १५८२ ।

३३. रक्षति १५८३ ।

३४. शब्ददर्दुरं करोति १५८४ ।

३५. पक्षिमत्स्यमृगान्हन्ति १५८५ ।

३६. परिपन्थं च तिष्ठति १५८६ ।

३७. माथोत्तरपदपदव्यनुपदं धावति १५८७

३८. आक्रन्दाट्ठञ्च १५८८ ।

३९. पदोत्तरपदं गृह्णाति १५८९ ।

४०. प्रतिकण्ठार्थललामं च १५९० ॥ २ ॥

४१. धर्मं चरति १५९१ ।

* अधर्माच्चेति वक्तव्यम् ।

४२. प्रतिपथमेति ठंश्च १५९२ ।

४३. समवायान्समवैति १५९३ ।

४४. परिषदो ण्यः १५९४ ।

४५. सेनाया वा १५९५ ।

४६. संज्ञायां ललाटकुक्कुट्यौ पश्यति १५९६

४७. तस्य धर्म्यम् १५९७ ।

४८. अण्महिष्यादिभ्यः १५९८ ।

१४०. महिषी प्रजापति प्रजावती प्रलेपिका विलेपिका अनुलेपिका पुरोहिता मणिपाली अनुवारक (अनुचारक) होतृ यजमान । इति महिष्यादिः ॥

४९. ऋतोऽञ् १५९९ ।

* नराच्चेति वक्तव्यम् ।

* विशसितुरिड्लोपश्चाञ्च वक्तव्यः ।

* विभाजयितुर्णिलोपश्चाञ्च वक्तव्यः ।

५०. अवक्रयः १६०० ।

५१. तदस्य पण्यम् १६०१ ।

५२. लवणाट्ठञ् १६०२ ।

५३. किसरादिभ्यः ष्ठन् १६०३ ।

१४१. किसर नरद नलद स्थागल तगर गुग्गुलु उशीर हरिद्रा हरिद्रु पर्गी (पर्णी) । इति किसरादिः ।

५४. शलालुनोऽन्यतरस्याम् १६०४ ।

५५. शिल्पम् १६०५ ।

५६. मड्डुकझर्झरादणन्यतरस्याम् १६०६ ।

५७. प्रहरणम् १६०७ ।

५८. परश्वधाट्ठञ्च १६०८ ।

५९. शक्तियष्ट्योरीकक् १६०९ ।

६०. अस्ति नास्ति दिष्टं मतिः १६१० ।

६१. शीलम् १६११ ॥ ३ ॥

६२. छत्रादिभ्यो णः १६१२ ।

१४२. छत्र शिक्षा प्ररोह स्था बुभुक्षा चुरा तितिक्षा उपस्थान कृषि कर्मन् विश्वधा तपस् सत्य अनृत विशिखा विशिका भक्षा उदस्थान पुरोडा विक्षा चुक्षा मन्द्र । इति छत्रादिः ॥

६३. कर्माध्ययने वृत्तम् १६१४ ।
६४. बह्वच्पूर्वपदाट्ठच् १६१५ ।
६५. हितं भक्षाः १६१६ ।
६६. तदस्मै दीयते नियत (नियुक्त)म् १६१७
६७. श्राणामांसौदनाट्टिठन् १६१८ ।
* मांसौदनग्रहणं संघातविगृहीतार्थम् ।
६८. भक्तादणन्यतरस्याम् १६१९ ।
६९. तत्र नियुक्तः १६२० ।
७०. अगारान्ताट्ठन् १६२१ ।
७१. अध्यायिन्यदेशकालात् १६२२ ।
७२. कठिनान्तप्रस्तारसंस्थानेषु व्यवहरति [१६२३
७३. निकटे वसति १६२४ ।
७४. आवसथात्ष्ठल् १६२५ ।
७५. प्राग्घिताद्यत् १६२६ ।
७६. तद्वहति रथयुगप्रासङ्गम् १६२७ ।
७७. धुरो यड्ढकौ १६२८ ।
७८. खः सर्वधुरात् १६३० ।
७९. एकधुराल्लुक्च १६३१ ।
८०. शकटादण् १६३२　　॥ ४ ॥
८१. हलसीराट्ठक् १६३३ ।
८२. संज्ञायां जन्याः १६३४ ।
८३. विध्यत्यधनुषा १६३५ ।
८४. धनगणं लब्धा १६३६ ।
८५. अन्नाण्णः १६३७ ।
८६. वशं गतः १६३८ ।
८७. पदमस्मिन्दृश्यम् १६३९ ।
८८. मूलमस्याबर्हि १६४० ।
८९. संज्ञायां धेनुष्या १६४१ ।

९०. गृहपतिना संयुक्ते ञ्यः १६४२ ।

९१. नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसंमितेषु १६४३ ।

९२. धर्मपथ्यर्थन्यायादनपेते १६४४ ।

९३. छन्दसो निर्मिते १६४५ ।

९४. उरसोऽण्च १६४६ ।

९५. हृदयस्य प्रियः १६४७ ।

९६. बन्धने चर्षौ १६४८ ।

९७. मतजनहलात्करणजल्पकर्षेषु १६४९ ।

९८. तत्र साधुः १६५० ।

९९. प्रतिजनादिभ्यः खञ् १६५१ ।

१४३. प्रतिजन इदंयुग संयुग समयुग परयुग परकुल परस्यकुल अमुष्यकुल सर्वजन विश्वजन महाजन पञ्चजन । इति प्रतिजनादिः ॥

१००. भक्ताण्णः १६५२ ॥ ५ ॥

१०१. परिषदो ण्यः १६५३ ।

१०२. कथादिभ्यष्ठक् १६५४ ।

१४४. कथा विकथा विश्वकथा संकथा वितण्डा कुष्टविद् ( कुष्ठविद् ) जनवाद जनेवाद जनोवाद वृत्ति संग्रह गुण गण आयुर्वेद । इति कथादिः ॥

१०३. गुडादिभ्यष्ठञ् १६५५ ।

१४५. गुड कल्माष सक्तु अपूप मांसौदन इक्षु वेणु संग्राम संघात (संक्राम संवाह) प्रवास निवास उपवास । इति गुडादिः ॥

१०४. पथ्यतिथिवसतिस्वपतेर्ढञ् १६५६ ।

१०५. सभाया यः १६५७ ।

१०६. ढश्छन्दसि ३४५५ ।

१०७. समानतीर्थे वासी १६५८ ।

१०८. समानोदरे शयित ओ चोदात्तः
१०९. सोदराद्यः १६६० । [१६५९
११०. भवे छन्दसि ३४५६ ।
१११. पाथोनदीभ्यां ड्यण् ३४५७ ।
११२. वेशन्तहिमवद्भ्यामण् ३४५८ ।
११३. स्रोतसो विभाषा ड्यड्ड्यौ ३४५९ ।
११४. सगर्भसयूथसनुताद्यन् ३४६० ।
११५. तुग्राद्घन् ३४६१ ।
११६. अग्राद्यत् ३४६२ ।
११७. घच्छौ च ३४६३ ।
११८. समुद्राभ्राद्घः ३४६४ ।
११९. बर्हिषि दत्तम् ३४६५ ।
१२०. दूतस्य भागकर्मणी ३४६६ ॥ ६ ॥
१२१. रक्षोयातूनां हननी ३४६७ ।
१२२. रेवतीजगतीहविष्याभ्यः प्रशस्ये
१२३. असुरस्य स्वम् ३४६९ । [३४६८
१२४. मायायामण् ३४७० ।
१२५. तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक्च मतोः ३४७१ ।
१२६. अश्विमानण् ३४७२ ।
१२७. वयस्यासु मूर्ध्नो मतुप् ३४७३ ।
१२८. मत्वर्थे मासतन्वोः ३४७४ ।
* मासतन्वोरनन्तरार्थे वा ।
* लुगकारेकाररेफाश्च ।
१२९. मधोर्ञ च ३४७५ ।
१३०. ओजसोऽहनि यत्खौ ३४७६ ।
१३१. वेशोयशआदेर्भगाद्यल्खौ ३४७७ ।
१३२. ख च ३४७८ ।

१३३. पूर्वैः कृतमिनियौ च ३४७९ ।

१३४. अद्भिः संस्कृतम् ३४८० ।

१३५. सहस्रेण संमितौ घः ३४८१ ।

१३६. मतौ च ३४८२ ।

१३७. सोममर्हति यः ३४८३ ।

१३८. मये च ३४८४ ।

१३९. मधोः ३४८५ ।

१४०. वसोः समूहे च ३४८६ ॥७॥

* अक्षरसमूहे छन्दस उपसंख्यानम् ।

१४१. नक्षत्राद्घः ३४८७ ।

१४२. सर्वदेवात्तातिल् ३४८८ ।

१४३. शिवशमरिष्टस्य करे ३४८९ ।

१४४. भावे च ३४९० ॥

प्राग्वहतेरपमित्यधर्मं शीलं हलपरिषदो
रक्षोनक्षत्राच्चत्वारि ॥

इति पाणिनीयसूत्रपाठे चतुर्थस्याध्यायस्य चतुर्थः पादः अध्यायश्च ।

# ॥ अथ पञ्चमोऽध्यायः ॥

## प्रथमः पादः ।

१. प्राक् क्रीताच्छः १६६१ ।

२. उगवादिभ्यो यत् १६६२ ।

१४६. गो हविस् अक्षर विष बर्हिस् अष्टका स्वदा युग मेधा स्रुच् । 'नाभि नभं च' ९५ । 'शुनः संप्रसारणं वा च दीर्घत्वं तत्संनियोगेन चान्तोदात्तत्वम्' ९६ । 'ऊधसोऽनङ् च' ९७ । कूप खद दर खर असुर अध्वन् (अध्वन) क्षर वेद बीज दीस (दीप्त) ॥ **इति गवादिः ॥**

३. कम्बलाच्च संज्ञायाम् १६६३ ।

४. विभाषा हविरपूपादिभ्यः १६६४ ।

१४७. अपूप तण्डुल अभ्युष (कभ्यूष) [अभ्योष अवोष अभ्येष] पृथुक ओदन सूप पूप किण्व प्रदीप मुसल कटक कर्णवेष्टक [इर्गल] अर्गल । 'अन्नविकारेभ्यश्च' ९८ । यूप स्थूणा दीप अश्व पत्र ॥ **इत्यपूपादिः ॥**

५. तस्मै हितम् १६६५ ।

६. शरीरावयवाद्यत् १६६६ ।

* यत्प्रकरणे रथाच्च ।

७. खलयवमाषतिलवृषब्रह्मणश्च १६६८ ।

८. अजाविभ्यां थ्यन् १६६९ ।

९. आत्मन्विश्वजनभोगोत्तरपदात्खः १६७०

* आचार्यादणत्वं च ।

* पञ्चजनादुपसंख्यानम् ।

* सर्वजनाट्ठञ् खश्च ।

* महाजनाट्ठञ् ।

* कर्मधारयादेवेष्यते ।

१०. सर्वपुरुषाभ्यां णढञौ १६७२ ।

* सर्वाण्णो वेति वक्तव्यम् ।

* पुरुषाद्वधविकारसमूहतेनकृतेष्विति वक्तव्यम् ।

११. माणवचरकाभ्यां खञ् १६७३ ।

१२. तदर्थं विकृतेः प्रकृतौ १६७४ ।

१३. छदिरुपधिबलेर्ढञ् १६७५ ।

१४. ऋषभोपानहोर्ञ्यः १६७६ ।

१५. चर्मणोऽञ् १६७७ ।

१६. तदस्य तदस्मिन्स्यादिति १६७८ ।

१७. परिखाया ढञ् १६७९ ।

१८. प्राग्वतेष्ठञ् १६८० । [१६८१

१९. आर्हादगोपुच्छसंख्यापरिमाणाट्ठक्

२०. असमासे निष्कादिभ्यः १६८२ ॥१॥

१४८. निष्क पण पाद माष वाह द्रोण षष्टि ॥

इति निष्कादिः ॥

* इत ऊर्ध्वं तु संख्यापूर्वपदानां तदन्तग्रहणं प्राग्वतेरिष्यते तच्चालुकि ।

२१. शताच्च ठन्यतावशते १६८६ ।

२२. संख्याया अतिशदन्तायाः कन् १६८७

२३. वतोरिड्वा १६८८ ।

२४. विंशतित्रिंशद्भ्यां ड्वुन्नसंज्ञायाम् १६८९

२५. कंसाट्टिठन् १६९० ।

* अर्धाच्चेति वक्तव्यम् ।

* कार्षापणाट्टिठन्वक्तव्यः प्रतिरादेशश्च वा ।

२६. शूर्पादञन्यतरस्याम् १६९१ ।

२७. शतमानविंशतिकसहस्रवसनादण् १६९२

२८. अध्यर्धपूर्वद्विगोर्लुगसंज्ञायाम् १६९३ ।

२९. विभाषा कार्षापणसहस्राभ्याम् १६९४

* सुवर्णशतमानयोरुपसंख्यानम् ।

३०. द्वित्रिपूर्वान्निष्कात् १६९५ ।

* बहुपूर्वाच्चेति वक्तव्यम् ।

३१. बिस्ताच्च १६९६ ।

* बहुपूर्वाच्च ।

३२. विंशतिकात्खः १६९७ ।

३३. खार्या ईकन् १६९८ ।

* केवलायाश्चेति वक्तव्यम् ।

३४. पणपादमाषशताद्यत् १६९९ ।

१. पूर्वाद्द्विगोरिति पाठान्तरम्

३५. शाणाद्वा १७०० ।

३६. द्वित्रिपूर्वादण्च १७०१ ।

३७. तेन क्रीतम् १७०२ ।

३८. तस्य निमित्तं संयोगोत्पातौ १७०४ ।

* वातपित्तश्लेष्मभ्यः शमनकोपयोरुपसंख्यानम् ।

* संनिपाताच्च ।

३९. गोद्व्यचोऽसंख्यापरिमाणाश्वादेर्यत् १७०५ ।

१४९. अश्व अश्मन् गण ऊर्णा (उर्म) उमा भङ्गा (गङ्गा) वर्षा वसु ॥ इत्यश्वादिः ॥

* ब्रह्मवर्चसादुपसंख्यानम् ।

४०. पुत्राच्छ च १७०६ ॥ २ ॥

४१. सर्वभूमिपृथिवीभ्यामणञौ १७०७ ।

४२. तस्येश्वरः १७०८ ।

४३. तत्र विदित इति च १७०९ ।

४४. लोकसर्वलोकाट्ठञ् १७१० ।

४५. तस्य वापः १७११ ।

४६. पात्रात्ष्ठन् १७१२ । [१७१३

४७. तदस्मिन्वृद्ध्यायलाभशुल्कोपदा दीयते

* चतुर्थ्यर्थे उपसंख्यानम् ।

४८. पूरणार्धाट्ठन् १७१४ ।

४९. भागाद्यच्च १७१५ । [१७१६

५०. तद्धरति वहत्यावहति भाराद्वंशादिभ्यः

१५०. वंश कुटज बल्वज मूल स्थूणा (स्थूण) अक्ष अश्मन् अश्व श्लक्ष्ण इक्षु खट्वा ॥ इति वंशादिः ।

५१. वस्नद्रव्याभ्यां ठन्कनौ १७१७ ।

५२. संभवत्यवहरति पचति १७१८ ।

* तत्पचतीति द्रोणादण्च ।

५३. आढकाचितपात्रात्खोऽन्यतरस्याम् [१७१९

५४. द्विगोः ष्ठंश्च १७२० ।

५५. कुलिजाल्लुक्खौ च १७२१ ।

५६. सोऽस्यांशवस्नभृतयः १७२२ ।

५७. तदस्य परिमाणम् १७२३ ।

५८. संख्यायाः संज्ञासंघसूत्राध्ययनेषु १७२४ ।

* तत्र संज्ञायां स्वार्थे प्रत्ययो वाच्यः ।

* स्तोमे डविधिः ।

* शन्शतोर्डिनिश्छन्दसि ।

* विंशतेश्च ।

५९. पंक्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम् १७२५ ।

६०. पञ्चद्दशतौ वर्गे वा १७२६ ॥ ३ ॥

६१. सप्तनोऽञ्छन्दसि ३४९१ ।

६२. त्रिंशच्चत्वारिंशतोर्ब्राह्मणे संज्ञायां डण् [१७२७

६३. तदर्हति १७२८ ।

६४. छेदादिभ्यो नित्यम् १७२९ ।

१५१. छेद भेद द्रोह दोह नर्ति (नर्त) कर्ष [तीर्थ] संप्रयोग विप्रयोग प्रयोग [विप्रकर्ष] प्रेषण संप्रश्न विप्रश्न विकर्ष प्रकर्ष । 'विराग विरङ्गं च' ९९ ॥ इति छेदादिः ॥

६५. शीर्षच्छेदाद्यच्च १७३० ।

६६. दण्डादिभ्यः (यत्) १७३१ ।

१५२. दण्ड मुसल मधुपर्क कशा अर्घ मेघ मेधा सुवर्ण उदक वध युग गुहा भाग इभ भङ्ग ॥ इति दण्डादिः ॥

६७. छन्दसि च ३४९२ ।

६८. पात्राद्घंश्च १७३२ ।

६९. कडङ्करदक्षिणाच्छ च १७३३ ।

७०. स्थालीबिलात् १७३४ ।

७१. यज्ञर्त्विग्भ्यां घखञौ १७३५ ।

* यज्ञर्त्विग्भ्यां तत्कर्मार्हतीत्युपसंख्यानम् ।

७२. पारायणतुरायणचान्द्रायणं वर्तयति [१७३६

७३. संशयमापन्नः १७३७ ।

७४. योजनं गच्छति १७३८ ।

* क्रोशशतयोजनशतयोरुपसंख्यानम् ।

* ततोऽभिगमनमर्हतीति च वक्तव्यम् ।

७५. पथः ष्कन् १७३९ ।

७६. पन्थो ण नित्यम् १७४० ।

७७. उत्तरपथेनाहृतं च १७४१ ।

* आहृतप्रकरणे वारिजङ्गलस्थलकान्तारपूर्वादुपसंख्यानम् ।

* अजपथशङ्कुपथाभ्यां च ।

* मधुकमरीचयोरण्स्थलात् ।

७८. कालात् १७४२।
७९. तेन निर्वृत्तम् १७४३। [॥ ४ ॥
८०. तमधीष्टो भृतो भूतो भावी १७४४।
८१. मासाद्वयसि यत्खञौ १७४५।
८२. द्विगोर्यप् १७४६।
८३. षण्मासाण्ण्यच्च १७४७।
८४. अवयसि ठंश्च १७४८।
८५. समायाः खः १७४९।
८६. द्विगोर्वा १७५०।
८७. रात्र्यहःसंवत्सराच्च १७५१।
८८. वर्षाल्लुक्च १७५३।
८९. चित्तवति नित्यम् १७५५।
९०. षष्टिकाः षष्टिरात्रेण पच्यन्ते १७५६।
९१. वत्सरान्ताच्छश्छन्दसि ३४९३।
९२. संपरिपूर्वात्ख च ३४९४।
९३. तेन परिजय्यलभ्यकार्यसुकरम् १७५७।
९४. तदस्य ब्रह्मचर्यम् १७५८।

* महानाम्न्यादिभ्यः षष्ठ्यन्तेभ्य उपसंख्यानम्।

१५३. (वा ३०६७)। महानाम्नी आदित्यव्रत गोदान॥ इति महानाम्न्यादिः॥

* अवान्तरदीक्षादिभ्यो डेर्निर्वक्तव्यः।

१५४. (वा ३०६९)। अवान्तरदीक्षा तिलव्रत देवव्रत॥ इत्यवान्तरदीक्षादिः॥

* चतुर्मासाण्ण्यो यज्ञे।

९५. तस्य च दक्षिणा यज्ञाख्येभ्यः १७५९।
९६. तत्र च दीयते कार्यं भववत् १७६०।
९७. व्युष्टादिभ्योऽण् १७६१।

१५५. व्युष्ट नित्य निष्क्रमण प्रवेशन [उपसंक्रमण] तीर्थ [अस्तरण] संग्राम संघात॥ इति व्युष्टादिः॥

* अग्निपदादिभ्य उपसंख्यानम्।

१५६. वा (३०७५)। अग्निपद पीलुमूल (पीलू मूल) प्रवास उपवास ॥ इत्यग्निपदादिः॥ आकृतिगणः॥

९८. तेन यथाकथाचहस्ताभ्यां णयतौ [१७६२

९९. संपादिनि १७६३।

१००. कर्मवेषाद्यत् १७६४ ॥ ५ ॥

१०१. तस्मै प्रभवति संतापादिभ्यः १७६५

१५७. संताप संनाह संग्राम संयोग संपराय [संवेशन] संपेष निष्पेष [सर्ग] निसर्ग विसर्ग उपसर्ग प्रवास उपवास संघात संवेष संवास संमोदन [सक्तु] 'मांसौदनाद्विगृहीतादपि' १०० । इति संतापादिः॥

१०२. योगाद्यच्च १७६६।

१०३. कर्मण उकञ् १७६७।

१०४. समयस्तदस्य प्राप्तम् १७६८।

१०५. ऋतोरण् १७६९।

* उपवस्त्रादिभ्य उपसंख्यानम्।

१५८. (वा)। उपवस्तृ प्राशितृ ॥ इत्युपवस्त्रादिः॥

१०६. छन्दसि घस् ३४९५।

१०७. कालाद्यत् १७७०।

१०८. प्रकृष्टे ठञ् १७७१।

१०९. प्रयोजनम् १७७२।

११०. विशाखाषाढादण्मन्थदण्डयोः १७७३

* चूडादिभ्य उपसंख्यानम्।

१५९. चूडा श्रद्धा ॥ इति चूडादिः॥

१११. अनुप्रवचनादिभ्यश्छः १७७४।

१६०. अनुप्रवचन उत्थापन उपस्थापन संवेशन प्रवेशन अनुप्रवेशन अनुवासन अनुवचन अनुवाचन अन्वारोहण प्रारम्भण आरम्भण आरोहण ॥ इत्यनुप्रवचनादिः॥

* (स्वर्गादिभ्यो यद्वक्तव्यः।)

१६१. (वा ३०७७)। स्वर्ग यशस् आयुस् काम धन ॥ इति स्वर्गादिः ॥

* पुण्याहवाचनादिभ्यो लुग्वक्तव्यः।

१६२. (वा ३०७८)। पुण्याहवाचन स्वस्तिवाचन शान्तिवाचन ॥ इति पुण्याहवाचनादिः ॥

११२. समापनात्सपूर्वपदात् १७७५।

११३. ऐकागारिकट् चौरे १७७६।

११४. आकालिकडाद्यन्तवचने १७७७।

* आकालाट्ठंश्च।

११५. तेन तुल्यं क्रिया चेद्वतिः १७७८।

११६. तत्र तस्येव १७७९।

११७. तदर्हम् १७८०।

११८. उपसर्गाच्छन्दसि धात्वर्थे ३४९६।

११९. तस्य भावस्त्वतलौ १७८१।

१२०. आ च त्वात् १७८२। ॥ ६ ॥

१२१. न नञ्पूर्वात्तत्पुरुषादचतुरसंगतलवणवटयुधकतरसलसेभ्यः १७८३।

१२२. पृथ्वादिभ्य इमनिज्वा १७८४।

१६३. पृथु मृदु महत् पटु तनु लघु बहु साधु आशु उरु गुरु बहुल खण्ड दण्ड चण्ड अकिंचन बाल होड पाक वत्स मन्द स्वादु ह्रस्व दीर्घ प्रिय वृष ऋजु क्षिप्र क्षुद्र अणु ॥ इति पृथ्वादिः ॥

१२३. वर्णदृढादिभ्यः ष्यञ्च १७८७।

१६४. दृढ वृढ परिवृढ भृश कृश [वक्र] शुक्र चुक्र आम्र [कृष्ट] लवण ताम्र शीत उष्ण जड बधिर पण्डित मधुर मूर्ख मूक। 'वेर्यातलातमतिर्मनःशारदानाम्' १०१। 'समा मतिमनसोः' १०२। जवन ॥ इति दृढादिः ॥

१२४. गुणवचनब्राह्मणादिभ्यः कर्मणि च १७८८।

१६५. ब्राह्मण बाडब माणव। ('अर्हतो नुम्च') १०३। चोर धूर्त आराधय विराधय अपराधय उपराधय एकभाव द्विभाव त्रिभाव अन्यभाव अक्षेत्रज्ञ संवादिन् संवेशिन् संभाषिन् बहुभाषिन् शीर्षघातिन् विघातिन् समस्थ विषमस्थ परमस्थ मध्यमस्थ अनीश्वर कुशल चपल निपुण पिशुन कुतूहल क्षेत्रज्ञ निश्न बालिश अलस दुःपुरुष कापुरुष राजन् गणपति अधिपति गडुल दायाद विशस्ति विषम विपात निपात। 'सर्ववेदादिभ्यः स्वार्थे' १०४। 'चतुर्वेदस्योभयपदवृद्धिश्च' १०५। शौटीर॥ **आकृतिगणोऽयम्। इति ब्राह्मणादिः॥**

* **चतुर्वर्णादीनां स्वार्थ उपसंख्यानम्।**

१६६. (वा ३०९४)। चतुर्वर्ण चतुर्वेद चतुराश्रम सर्वविद्य त्रिलोक त्रिस्वर षड्गुण सेना अनन्तर संनिधि समीप उपमा सुख तदर्थ इतिह मणिक॥ **इति चतुर्वर्णादिः॥**

**१२५. स्तेनाद्यन्नलोपश्च १७९०।**

**१२६. सख्युर्यः १७९१।**

* **दूतवणिग्भ्यां च।**

**१२७. कपिज्ञात्योर्ढक् १७९२।**

**१२८. पत्यन्तपुरोहितादिभ्यो यक् १७९३।**

१६७. पुरोहित। 'राजाऽसे' १०६। ग्रामिक पिण्डिक सुहित बालमन्द (बाल मन्द) खण्डिक दण्डिक वर्मिक कर्मिक धर्मिक शितिक (सूतिक मूलिक तिलक) अञ्जलिक (अन्तलिक) [रूपिक ऋषिक] पुत्रिक अविक छत्रिक पर्षिक पथिक चर्मिक (प्रतिक) सारथि आस्तिक सूचिक संरक्षसूचक (संरक्ष सूचक) नास्तिक [अजानिक शाक्वर नागर चूडिक]॥ **इति पुरोहितादिः॥**

**१२९. प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ् १७९४।**

१६८. उद्गातृ उन्नेतृ प्रतिहर्तृ प्रशास्तृ होतृ पोतृ हर्तृ रथगणक पत्तिगणक सुष्ठु दुष्ठु अध्वर्यु वधू। 'सुभग मन्त्रे' १०७। **इत्युद्गात्रादिः॥**

१३०. हायनान्तयुवादिभ्योऽण् १७९५।

१६९. युवन् स्थविर होतृ यजमान। 'पुरुषासे' १०८। भ्रातृ कुतुक श्रमण (श्रणम) कटुक कमण्डलु कुस्त्री सुस्त्री दुःस्त्री सुहृदय दुर्हृदय सुहृद् दुर्हृद् सुभ्रातृ दुर्भ्रातृ वृषल परिव्राजक सब्रह्मचारिन् अनृशंस। 'हृदयासे' १०९। कुशल चपल निपुण पिशुन कुतूहल क्षेत्रज्ञ। ('श्रोत्रियस्य यलोपश्च') ११०॥ **इति युवादिः॥**

१३१. इगन्ताच्च लघुपूर्वात् १७९६।

१३२. योपधाद्गुरूपोत्तमाद्वुञ् १७९७।

१३३. द्वन्द्वमनोज्ञादिभ्यश्च १७९८।

१७०. मनोज्ञ प्रियरूप अभिरूप कल्याण मेधाविन् आढ्य कुलपुत्र छान्दस छात्र श्रोत्रिय चोर धूर्त विश्वदेव युवन् कुपुत्र ग्रामपुत्र ग्रामकुलाल ग्रामड (ग्रामषण्ड) ग्रामकुमार सुकुमार बहुल (अवश्यपुत्र) अमुष्यपुत्र अमुष्यकुल सारपुत्र शतपुत्र॥ **इति मनोज्ञादिः॥**

१३४. गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु [१७९९

१३५. होत्राभ्यश्छः १८००

१३६. ब्रह्मणस्त्वः १८०१।

प्राक्क्रीताच्छताच्च सर्वभूमिसप्तनोऽब्मासा-
त्तस्मै प्रभवति न नञ्पूर्वात्षोडश॥

इति पाणिनीयसूत्रपाठे पञ्चमस्याध्यायस्य प्रथमः पादः।

## द्वितीयः पादः।

१. धान्यानां भवने क्षेत्रे खञ् १८०२।

२. व्रीहिशाल्योर्ढक् १८०३।

३. यवयवकषष्टिकाद्यत् १८०४।

४. विभाषा तिलमाषोमाभङ्गाणुभ्यः १८०५

५. सर्वचर्मणः कृतः खखञौ १८०६।

६. यथामुखसंमुखस्य दर्शनः खः १८०७

७. तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति १८०८।

८. आप्रपदं प्राप्नोति १८०९। १८१०

९. अनुपदसर्वान्नायानयं बद्धाभक्षयतिनेयेषु

१०. परोवरपरम्परपुत्रपौत्रमनुभवति १८११

११. अवारपारात्यन्तानुकामं गामी १८१२

१२. समांसमां विजायते १८१३।

* खप्रत्ययानुत्पत्तौ यलोपो वा वक्तव्यः।

१३. अद्यश्वीनाऽवष्टब्धे १८१४।

१४. आगवीनः १८१५।

१५. अनुग्वलं गामी १८१६।

१६. अध्वनो यत्खौ १८१७।

१७. अभ्यमित्राच्छ च १८१८।

१८. गोष्ठात्खञ्भूतपूर्वे १८१९।

१९. अश्वस्यैकाहगमः १८२०।

२०. शालीनकौपीने अधृष्टाकार्ययोः १८२१

२१. व्रातेन जीवति १८२२। [॥ १ ॥

२२. साप्तपदीनं सख्यम् १८२३।

२३. हैयङ्गवीनं संज्ञायाम् १८२४।

२४. तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ १८२५।

१७१. पीलु कर्कन्धू (कर्कन्धु) शमी करीर बल (कुवल) बदर अश्वत्थ खदिर ॥ इति पील्वादिः ॥

१७२. कर्ण अक्षि नख मुख केश पाद गुल्फ भ्रू शृङ्ग दन्त ओष्ठ पृष्ठ ॥ इति कर्णादिः ॥

२५. पक्षात्तिः १८२६।

२६. तेन वित्तश्चुञ्चुप्चणपौ १८२७।

२७. विनञ्भ्यां नानाञौ नसह १८२८।

२८. वेः शालच्छङ्कटचौ १८२९।

२९. संप्रोदश्च कटच् १८३०।

* अलाबूतिलोमाभङ्गाभ्यो रजस्युपसंख्यानम्।

* गोष्ठजादयः स्थानादिषु पशुनामभ्यः।

* संघाते कटच्।

* विस्तारे पटच्।

* द्वित्वे गोयुगच्।

* षट्त्वे षड्गवच्।

* स्नेहे तैलच्

* भवने क्षेत्रे शाकटशाकिनौ।

३०. अवात्कुटारच्च १८३१।

३१. नते नासिकायाः संज्ञायां टीटञ्नाट-ज्भ्रटचः १८३२।

३२. नेर्बिडज्बिरीसचौ १८३३।

३३. इनच्पिटच्चिकचि च १८३४।

* कप्रत्ययचिकादेशौ च वक्तव्यौ।

* क्लिन्नस्य चिल् पिल् लश्चास्य चक्षुषी।

* चुल् च।

३४. उपाधिभ्यां त्यकन्नासन्नारूढयोः १८३५

३५. कर्मणि घटोऽठच् १८३६। [१८३७

३६. तदस्य संजातं तारकादिभ्य इतच्

१७३. तारका पुष्प कर्णक मञ्जरी ऋजीष [क्षण सूच] मूत्र निष्क्रमण पुरीष उच्चार प्रचार (विचार) कुड्मल कण्टक मुसल (मुकुल) कुसुम कुतूहल स्तबक (स्तवक) किसलय पल्लव (खण्ड) वेग निद्रा मुद्रा बुभुक्षा (धेनुष्या) पिपासा श्रद्धा अभ्र पुलक अङ्गारक वर्णक द्रोह दोह सुख दुःख उत्कण्ठा भर व्याधि वर्मन् व्रण गौरव शास्त्र तरङ्ग तिलक चन्द्रक अन्धकार गर्व कुमुर (मुकुर) हर्ष उत्कर्ष (रण) कुवलय गर्ध क्षुध् सीमन्त ज्वर गर रोग रोमाञ्च पण्डा कज्जल तृष् कोरक कल्लोल स्थपुट फल

कञ्चुक शृङ्गार अङ्कुर शैवल वकुल श्वभ्र आराल कलङ्क कर्दम (कन्दल) मूर्च्छा अङ्गार हस्तक प्रतिबिम्ब विघ्न-तन्त्र प्रत्यय दीक्षा गर्ज । 'गर्भादप्राणिनि' १११ ॥

इति तारकादिः ॥ आकृतिगणः ॥

३७. प्रमाणे द्वयसज्दघ्नञ्मात्रचः १८३८ ।

* प्रमाणे लः ।

* द्विगोर्नित्यम् ।

* प्रमाणपरिमाणाभ्यां संख्यायाश्चापि संशये मात्रच् ।

* वत्वन्तात्स्वार्थे द्वयसज्मात्रचौ बहुलम् ।

३८. पुरुषहस्तिभ्यामण्च १८३९ ।

३९. यत्तदेतेभ्यः परिमाणे वतुप् १८४० ।

* युष्मदस्मदोः सादृश्ये वतुब्वाच्यः ।

४०. किमिदंभ्यां वो घः १८४१ ॥२॥

४१. किमः संख्यापरिमाणे डति च १८४२

४२. संख्याया अवयवे तयप् १८४३ ।

४३. द्वित्रिभ्यां तयस्यायज्वा १८४४ ।

४४. उभादुदात्तो नित्यम् १८४५ ।

४५. तदस्मिन्नधिकमिति दशान्ताड्डः १८४६

४६. शदन्तविंशतेश्च १८४७ ।

४७. संख्याया गुणस्य निमाने मयट् १८४८

४८. तस्य पूरणे डट् १८४९ ।

४९. नान्तादसंख्यादेर्मट् १८५० ।

५०. थट् च च्छन्दसि ३४९७ ।

५१. षट्कतिकतिपयचतुरां थुक् १८५१ ।

* चतुरश्छयतावाद्यक्षरलोपश्च ।

५२. बहुपूगगणसङ्घस्य तिथुक् १८५२ ।

५३. वतोरिथुक् १८५३ ।

५४. द्वेस्तीयः १८५४ ।

५५. त्रेः संप्रसारणं च १८५५ ।

५६. विंशत्यादिभ्यस्तमडन्यतरस्याम् १८५६
५७. नित्यं शतादिमासार्धमाससंवत्सराच्च १८५७ ।
५८. षष्ट्याादेश्चासंख्यादेः १८५८ ।
५९. मतौ छः सूक्तसाम्नोः १८५९ ।
६०. अध्यायानुवाकयोर्लुक् १८६० ॥३॥
६१. विमुक्तादिभ्योऽण् १८६१ ।

१७४. विमुक्त देवासुर रक्षोसुर उपसद् सुवर्ण परिसारक (सदसत्) वसु मरुत् पत्नीवत् वसुमत् महीयत्व सत्वत् बर्हवत् दशार्ण दशार्ह वयस् हविर्धान पतत्रिन् महित्री अस्यहत्य सोमापुषन् (सोमापूषन्) इडा अग्नाविष्णू उर्वशी वृत्रहन् ॥ इति विमुक्तादिः ॥

६२. गोषदादिभ्यो वुन् १८६२ ।

१७५. गोषद (गोषद्) इषेत्वा मातरिश्वन् देवस्य त्वा देवीरापः कृष्णोऽस्याखरेष्ठः देवींधिया (दैवींधिय) रक्षोहण युञ्जान अञ्जन प्रभूत प्रतूत कृशानु (कृशाकु) ॥ इति गोषदादिः ॥

६३. तत्र कुशलः पथः १८६३ ।
६४. आकर्षादिभ्यः कन् १८६४ ।

१७६. आकर्ष त्सरु पिशाच पिचण्ड अशनि अश्मन् निचय चय (विजय) जय आचय नय पाद दीप ह्रद ह्राद ह्लाद (गद्गद) शकुनि ॥ इत्याकर्षादिः ॥

६५. धनहिरण्यात्कामे १८६५ ।
६६. स्वाङ्गेभ्यः प्रसिते १८६६ ।
६७. उदराट्ठगाद्यूने १८६७ ।
६८. सस्येन परिजातः १८६८ ।
६९. अंशं हारी १८६९ ।
७०. तन्त्रादचिरापहृते १८७० ।
७१. ब्राह्मणकोष्णिके संज्ञायाम् १८७१ ।
७२. शीतोष्णाभ्यां कारिणि १८७२ ।

७३. अधिकम् १८७३ ।

७४. अनुकाभिकाभीकः कमिता १८७४ ।

७५. पार्श्वेनान्विच्छति १८७५ । [१८७६

७६. अयःशूलदण्डाजिनाभ्यां ठक्ठञौ

७७. तावतिथं ग्रहणमिति लुग्वा १८७७ ।

* तावतिथेन गृह्णातीति कन्वक्तव्यो नित्यं च लुक् ।

७८. स एषां ग्रामणीः १८७८ ।

७९. शृङ्खलमस्य बन्धनं करभे १८७९ ।

८०. उत्क उन्मनाः १८८० । ॥ ४ ॥

८१. कालप्रयोजनाद्रोगे १८८१ ।

८२. तदस्मिन्नन्नं प्रायेण संज्ञायाम् १८८२ ।

* वटकेभ्य इनिर्वाच्यः ।

८३. कुल्माषादञ् १८८३ ।

८४. श्रोत्रियंश्छन्दोऽधीते १८८४ ।

८५. श्राद्धमनेन भुक्तमिनिठनौ १८८५ ।

८६. पूर्वादिनिः १८८६ ।

८७. सपूर्वाच्च १८८७ ।

८८. इष्टादिभ्यश्च १८८८ ।

१७७. इष्ट पूर्त उपासादित निगदित परिगदित (परिवादित) निकथित निषादित निपठित संकलित परिकलित संरक्षित परिरक्षित अर्चित गणित अवकीर्ण आयुक्त गृहीत आम्नात श्रुत अधीत (अवधान) आसेवित अवधारित अवकल्पित निराकृत उपकृत उपाकृत अनुयुक्त अनुगणित अनुपठित व्याकुलित ॥ इतीष्टादिः ॥

८९. छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि १८८९ ।

९०. अनुपद्यन्वेष्टा १८९० ।

९१. साक्षाद्द्रष्टरि संज्ञायाम् १८९१ ।

९२. क्षेत्रियच्परक्षेत्रे चिकित्स्यः १८९२ ।

९३. इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा १८९३।

९४. तदस्यास्त्यस्मिन्निति मतुप् १८९४।

९५. रसादिभ्यश्च १८९५।

१७८. रस रूप वर्ण गन्ध स्पर्श शब्द स्नेह भाव। 'गुणात्' ११२। 'एकाचः' ११३॥ इति रसादिः॥

* गुणवचनेभ्यो मतुपो लुक्।

९६. प्राणिस्थादातो लजन्यतरस्याम् १९०३

* प्राण्यङ्गादेव।

९७. सिध्मादिभ्यश्च १९०४।

१७९. सिध्म गडु मणि नाभि बीज (वीणा) कृष्ण निष्पाव पांसु पार्श्व पर्शु हनु सक्तु मास (मांस)। 'पार्ष्णिधमन्योर्दीर्घश्च' ११४। 'वातदन्तबलललाटानामूङ् च' ११५। 'जटाघटाकटाकालाः क्षेपे' ११६। पर्ण उदक प्रज्ञा सक्थि कर्ण स्नेह शीत श्याम पिङ्ग पित्त पुष्क पृथु मृदु मञ्जु (मण्ड) पत्र चटु कपि गण्डु ग्रन्थि श्री कुश धारा वर्ष्मन् पक्ष्मन् श्लेष्मन् पेश निष्पाद् कुण्ड 'क्षुद्रजन्तूपतापयोश्च' ११७॥ इति सिध्मादिः॥

९८. वत्सांसाभ्यां कामबले १९०५।

९९. फेनादिलच्च १९०६।

१००. लोमादिपामादिपिच्छादिभ्यः शनेलचः १९०७॥ ५॥

१८०. लोमन् रोमन् बभ्रु हरि गिरि कर्क कपि मुनि तरु॥ इति लोमादिः॥ १८१. पामन् वामन् वेमन् हेमन् श्लेष्मन् कद्रु (कद्रू) बलि सामन् ऊष्मन् कृमि। 'अङ्गात्कल्याणे' ११८। 'शाकीपलालीदद्रूणां ह्रस्वत्वं च' ११९। ('विष्वगित्युत्तरपदलोपश्चाकृतसन्धेः') १२०। 'लक्ष्म्या अच्च' १२१॥ इति पामादिः॥ १८२. पिच्छा उरस् ध्रुवक ध्रुवक। 'जटाघटाकालाः क्षेपे' १२२। वर्ण उदक पङ्क प्रज्ञा॥ इति पिच्छादिः।

* विष्वगित्युत्तरपदलोपश्चाकृतसन्धेः।

१०१. प्रज्ञाश्रद्धार्चाभ्यो णः १९०८ ।

* वृत्तेश्च ।

१०२. तपःसहस्राभ्यां विनीनी १९०९ ।

१०३. अण्च १९१० ।

* ज्योत्स्नादिभ्य उपसंख्यानम् ।

१८३. (वा ३२००) । ज्योत्स्ना तमिस्रा कुण्डल कुतप विसर्प विपादिका ॥ इति ज्योत्स्नादिः ॥

१०४. सिकताशर्कराभ्यां च १९११ ।

१०५. देशे लुबिलचौ च १९१२ ।

१०६. दन्त उन्नत उरच् १९१३ ।

१०७. ऊषसुषिमुष्कमधो रः १९१४ ।

* रप्रकरणे खमुखकुञ्जेभ्य उपसंख्यानम् ।

* नगपांसुपाण्डुभ्यश्च ।

* कच्छ्वा ह्रस्वत्वं च ।

१०८. द्युद्रुभ्यां मः १९१५ ।

१०९. केशाद्वोऽन्यतरस्याम् १९१६ ।

* अन्येभ्योऽपि दृश्यत इति वक्तव्यम् ।

* अर्णसो लोपश्च ।

* छन्दसीवनिपौ च ।

* मेधारथाभ्यामीरन्निरचौ वक्तव्यौ ।

११०. गाण्ड्यजगात्संज्ञायाम् १९१७ ।

१११. काण्डाण्डादीरन्नीरचौ १९१८ ।

११२. रजःकृष्यासुतिपरिषदो वलच् १९१९

* अन्येभ्योऽपि दृश्यते ।

११३. दन्तशिखात्संज्ञायाम् १९२० ।

११४. ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः १९२१ ।

११५. अत इनिठनौ १९२२ ।

११६. व्रीह्यादिभ्यश्च १९२३ ।

१८४. व्रीहि माया (शाला) शिखा माला मेखला केका अष्टका पताका चर्मन् कर्मन् वर्मन् दंष्ट्रा संज्ञा बडबा कुमारी नौ वीणा बलाका यवखदनौ कुमारी । 'शीर्षान्नञः' १२३ ॥ इति व्रीह्यादिः ॥

* शिखामालासंज्ञादिभ्य इनिः ।

* यवखदादिभ्य इकः ।

* अन्येभ्य उभयम् ।

११७. तुन्दादिभ्य इलच्च १९२४ ।

१८५. तुन्द उदर पिचण्ड यव व्रीहि । 'स्वाङ्गाद्विवृद्धौ' १२४ ॥ इति तुन्दादिः ॥

११८. एकगोपूर्वाट्ठञ्नित्यम् १९२५ ।

११९. शतसहस्रान्ताच्च निष्कात् १९२६ ।

१२०. रूपादाहतप्रशंसयोर्यप् १९२७ ॥६॥

* अन्येभ्योऽपि दृश्यते ।

१२१. अस्मायामेधास्रजो विनिः १९२८ ।

१२२. बहुलं छन्दसि ३४९८ ।

* आमयस्योपसंख्यानं दीर्घश्च ।

* शृङ्गवृन्दाभ्यामारकन् ।

* फलबर्हाभ्यामिनच् ।

* हृदयाच्चालुरन्यतरस्याम् ।

* शीतोष्णतृप्रेभ्यस्तदसहने ।

* हिमाच्चेलुः ।

* बलादूलः ।

* वातात्समूहे च ।

* तप्पर्वमरुद्भ्याम् ।

१२३. ऊर्णाया युस् १९२९ ।

१२४. वाचो ग्मिनिः १९३० ।

१२५. आलजाटचौ बहुभाषिणि १९३१ ।

* कुत्सित इति वक्तव्यम् ।

१२६. स्वामिन्नैश्वर्ये १९३२ ।

१२७. अर्शआदिभ्योऽच् १९३३ ।

१८६. अर्शस् उरस् तुन्द चतुर पलित जटा (घटा) घाटा अभ्र (अघ) (कर्दम) अम्ल लवण । 'स्वाङ्गाद्धीनात्' १२५ । वर्णात् ॥ इत्यर्शआदिः ॥ आकृतिगणः ॥

१२८. द्वन्द्वोपतापगर्ह्यात्प्राणिस्थादिनिः १९३४

१२९. वातातीसाराभ्यां कुक्च १९३५ ।

* पिशाचाच्च ।

१३०. वयसि पूरणात् १९३६ ।

१३१. सुखादिभ्यश्च १९३७ ।

१८७. सुख दुःख तृप्त [तृप्र] कृच्छ्र अस्र (आश्र) आस्र (अस्र) अलीक करुण सोढ प्रतीप शील हल । 'माला क्षेपे' १२६ । (कृपण) प्रणाय (प्रणय) दल कक्ष ॥ इति सुखादिः ॥

१३२. धर्मशीलवर्णान्ताच्च १९३८ ।

१३३. हस्ताज्जातौ १९३९ ।

१३४. वर्णाद्ब्रह्मचारिणि १९४० ।

१३५. पुष्करादिभ्यो देशे १९४१ ।

१८८. पुष्कर पद्म उत्पल तमाल कुमुद नड कपित्थ बिस मृणाल कर्दम शालूक विगर्ह करीष शिरीष यवास (प्रवास) हिरण्य कैरव कल्लोल तट तरङ्ग पङ्कज सरोज राजीव नालीक सरोरुह पुटक अरविन्द अम्भोज अब्ज कमल (कल्लोल) पयस् ॥ इति पुष्करादिः ॥

* बाहूरू पूर्वपदाद्बलात् ।

* सर्वादेश्च ।

* अर्थाच्चासंनिहिते ।

* तदन्ताच्च ।

१३६. बलादिभ्यो मतुबन्यतरस्याम् १९४२

१८९. बल उत्साह (उद्भास उद्वास) उद्वास शिखा

कुल चूडा सुल कूल आयाम व्यायाम उपयाम आरोह अवरोह परिणाह (युद्ध) ॥ इति बलादिः ॥

१३७. संज्ञायां मन्माभ्याम् १९४३ ।

१३८. कंशंभ्यां बभयुस्तितुतयसः १९४४ ।

१३९. तुन्दिवलिवटेर्भः १९४५ ।

१४०. अहंशुभमोर्युस् १९४६ ॥ ७ ॥

धान्यानां व्रातेन किमो विमुक्तादिभ्यः काल-
प्रयोजनात्प्रज्ञाश्रद्धास्नायामेधाविंशतिः ॥

इति पाणिनीयसूत्रपाठे पञ्चमस्याध्यायस्य द्वितीयः पादः।

## तृतीयः पादः।

१. प्राग्दिशो विभक्तिः १९४७ ।

२. किंसर्वनामबहुभ्योऽद्व्यादिभ्यः १९४८

३. इदम इश् १९४९ ।

४. एतेतौ रथोः १९५० ।

* थाहेतौ च च्छन्दसि ।

५. एतदोऽन् १९५१ ।

६. सर्वस्य सोऽन्यतरस्यां दि १९५२ ।

७. पञ्चम्यास्तसिल् १९५३ ।

८. तसेश्च १९५५ ।

९. पर्यभिभ्यां च १९५६ ।

* सर्वोभयार्थाभ्यामेव ।

१०. सप्तम्यास्त्रल् १९५७ ।

११. इदमो हः १९५८ ।

१२. किमोऽत् १९५९ ।

१३. वा ह च च्छन्दसि १९६१ ।

१४. इतराभ्योऽपि दृश्यन्ते १९६३ ।

* दृशिर्ग्रहणाद्भवदादियोग एव।

१९०. (वा ३२४४)। भवान् दीर्घायुः देवानां प्रियः आयुष्मान्॥ इति भवदादिः॥

१५. सर्वैकान्यकिंयत्तदः काले दा १९६४।

१६. इदमो र्हिल् १९६५।

१७. अधुना १९६६।

१८. दानीं च १९६७।

१९. तदो दा च १९६८।

* तदो दावचनमनर्थकं विहितत्वात्।

२०. तयोर्दार्हिलौ च च्छन्दसि ३४९९॥१॥

२१. अनद्यतने र्हिलन्यतरस्याम् १९६९।

२२. सद्यःपरुत्परार्यैषमःपरेद्यव्यद्यपूर्वेद्युरन्ये-द्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभये-द्युरुत्तरेद्युः १९७०।

* समानस्य सभावो द्यस् चाहनि।

* पूर्वपूर्वतरयोः परभाव उदारी च संवत्सरे।

* इदम इश् समसण् प्रत्ययश्च संवत्सरे।

* परस्मादेद्यव्यहनि।

* इदमोऽशभावो द्यश्च।

* पूर्वान्यान्यतरेतरापराधरोभयोत्तरेभ्यो[ऽहनि]एद्युस्।

* द्युश्चोभयात्।

२३. प्रकारवचने थाल् १९७१।

२४. इदमस्थमुः १९७२।

* एतदो वाच्यः।

२५. किमश्च १९७३।

२६. था हेतौ च च्छन्दसि ३५००।

२७. दिक्छब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः १९७४।

२८. दक्षिणोत्तराभ्यामतसुच् १९७८।

२९. विभाषा परावराभ्याम् १९७९ ।

३०. अञ्चेर्लुक् १९८० ।

३१. उपर्युपरिष्टात् १९८१ ।

३२. पश्चात् १९८२ ।

* अपरस्यार्धे पश्चभावो वक्तव्यः ।

३३. पश्च पश्चा च च्छन्दसि ३५०१ ।

३४. उत्तराधरदक्षिणादातिः १९८३ ।

३५. एनबन्यतरस्यामदूरेऽपञ्चम्याः१९८४

३६. दक्षिणादाच् १९८५ ।

३७. आहि च दूरे १९८६ ।

३८. उत्तराच्च १९८७ । [१९७५

३९. पूर्वाधरावराणामसि पुरधवश्चैषाम्

४०. अस्ताति च १९७६ ॥ २ ॥

४१. विभाषाऽवरस्य १९७७ ।

४२. संख्याया विधार्थे धा १९८८ ।

४३. अधिकरणविचाले च १९८९ ।

४४. एकाद्धो ध्यमुञन्यतरस्याम् १९९० ।

४५. द्वित्र्योश्च धमुञ् १९९१ ।

* धमुञन्तात्स्वार्थे डदर्शनम् ।

४६. एधाच्च १९९२ ।

४७. याप्ये पाशप् १९९३ ।

४८. पूरणाद्भागे तीयादन् १९९४ ।

४९. प्रागेकादशभ्योऽछन्दसि १९९५ ।

५०. षष्ठाष्टमाभ्यां ञ च १९९६ ।

५१. मानपश्वङ्गयोः कन्लुकौ च १९९७ ।

५२. एकादाकिनिच्चासहाये १९९८ ।

५३. भूतपूर्वे चरट् १९९९ ।

५४. षष्ठ्या रूप्य च २००० ।

५५. अतिशायने तमबिष्ठनौ २००१ ।
५६. तिङश्च २००२ ।　　[२००५
५७. द्विवचनविभज्योपपदे तरबीयसुनौ
५८. अजादी गुणवचनादेव २००६ ।
५९. तुश्छन्दसि २००७ ।
६०. प्रशस्यस्य श्रः २००९　　॥ ३ ॥
६१. ज्य च २०११ ।
६२. वृद्धस्य च २०१३ ।
६३. अन्तिकबाढयोर्नेदसाधौ २०१४ ।
६४. युवाल्पयोः कनन्यतरस्याम् २०१९ -
६५. विन्मतोर्लुक् २०२० ।
६६. प्रशंसायां रूपप् २०२१ ।
६७. ईषदसमाप्तौ कल्पब्देश्यदेशीयरः२०२२
६८. विभाषा सुपो बहुच्पुरस्तात्तु २०२३ ।
६९. प्रकारवचने जातीयर् २०२४ ।
७०. प्रागिवात्कः २०२५ ।
७१. अव्ययसर्वनाम्नामकच्प्राक्टेः २०२६ ।
७२. कस्य च दः २०२७ ।
* ओकारसकारभकारादौ सुपि सर्वनाम्नष्टेः प्रागकच् ।
* अकच्प्रकरणे तूष्णीमः काम् ।
* शीले को मलोपश्च ।
७३. अज्ञाते २०२८ ।
७४. कुत्सिते २०२९ ।
७५. संज्ञायां कन् २०३० ।
७६. अनुकम्पायाम् २०३१ ।
७७. नीतौ च तद्युक्तात् २०३२ ।
७८. बह्वचो मनुष्यनाम्नष्ठज्वा २०३३ ।
७९. घनिलचौ च २०३४ ।

८०. प्राचामुपादेरडज्वुचौ च २०३६॥४॥
८१. जातिनाम्नः कन् २०३७।
८२. अजिनान्तस्योत्तरपदलोपश्च २०३९।
८३. ठाजादावूर्ध्वं द्वितीयादचः २०३५।
* चतुर्थादच ऊर्ध्वस्य लोपो वक्तव्यः।
* अनजादौ च विभाषा लोपो वक्तव्यः।
* लोपः पूर्वपदस्य च।
* विनापि प्रत्ययं पूर्वोत्तरपदयोर्वा लोपो वाच्यः।
* उवर्णाल्ल इलस्य च।
* (ऋवर्णादपि)।
* ठग्रहणमुको द्वितीयत्वे कविधानार्थम्।
* द्वितीयं संध्यक्षरं चेत्तदादेर्लोपो वक्तव्यः।
८४. शेवलसुपरिविशालवरुणार्यमादीनां तृतीयात् २०३८।
* एकाक्षरपूर्वपदानामुत्तरपदलोपो वक्तव्यः।
* षषष्ठाजादिवचनात्सिद्धम्।

८५. अल्पे २०४०।
८६. ह्रस्वे २०४१।
८७. संज्ञायां कन् २०४२।
८८. कुटीशमीशुण्डाभ्यो रः २०४३।
८९. कुत्वा डुपच् २०४४।
९०. कासूगोणीभ्यां ष्टरच् २०४५।
९१. वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे २०४६।
९२. किंयत्तदो निर्धारणे द्वयोरेकस्य डतरच २०४७।
९३. वा बहूनां जातिपरिप्रश्ने डतमच्२०४८
९४. एकाच्च प्राचाम् २०४९।
९५. अवक्षेपणे कन् २०५०।
९६. इवे प्रतिकृतौ २०५१।
९७. संज्ञायां च २०५२।

९८. लुम्मनुष्ये २०५३।

९९. जीविकार्थे चापण्ये २०५४।

१००. देवपथादिभ्यश्च २०५५ ॥५॥

१९१. देवपथ (हंसपथ वारिपथ रथपथ) स्थलपथ करिपथ अजपथ राजपथ शतपथ शङ्कुपथ सिन्धुपथ सिद्धगति उष्ट्रग्रीव वामरज्जु हस्त इन्द्र दण्ड पुष्प मत्स्य इति देवपथादिः ॥ आकृतिगणः ॥

१०१. वस्तेर्ढञ् २०५६।

१०२. शिलाया ढः २०५७।

१०३. शाखादिभ्यो यः २०५८।

१९२. शाखा मुख जघन शृङ्ग मेघ अभ्र चरण स्कन्ध स्कद (स्कन्द) उरस् शिरस् अग्र (शाण) शरण ॥ इति शाखादिः ॥

१०४. द्रव्यं च भव्ये २०५९।

१०५. कुशाग्राच्छः २०६०।

१०६. समासाच्च तद्विषयात् २०६१।

१०७. शर्करादिभ्योऽण् २०६२।

१९३. शर्करा कपालिका कपाटिका कपिष्ठिका (कनिष्ठिका) पुण्डरीक शतपत्र गोलोमन् लोमन् गोपुच्छ नराची नकुल सिकता ॥ इति शर्करादिः ॥

१०८. अङ्गुल्यादिभ्यष्ठक् २०६३।

१९४. अङ्गुली भरुज बभ्रु वल्गु मण्डर मण्डल शष्कुली हरि कपि मुनि रुह खल उदश्वित् गोणी उरस् कुलिश ॥ इत्यङ्गुल्यादिः ॥

१०९. एकशालायाष्ठजन्यतरस्याम् २०६४।

११०. कर्कलोहितादीकक् २०६५।

१११. प्रत्नपूर्वविश्वेमात्थाल्छन्दसि ३५०२।

११२. पूगाञ्ञ्योऽग्रामणीपूर्वात् २०६६।

११३. व्रातच्फञोरस्त्रियाम् ११००।

